अथ मध्या प्रगल्भा—

पूर्णा कृत्रिमहार्दमार्दवपरैर्वास्योपचारे प्रिया
तामेवानुसर त्वदीयहृदये यस्या नखाङ्कं पदम्।
लब्ध रागपरे सुभङ्गुरतर कुत्रावकाशो मम
प्रायस्ते कितवस्य नार्जवपरे माहग्जनेऽत्यादरः ॥ ७२ ॥

अथाधीरा प्रगल्भा—

विनयधैर्यलोलविलोचनैं शठपरा सखीचिता कामिनी
यदृशा दोर्द्वयपाशबन्धनविधौ भूयस्तरा द्रक्ष्यसि।
इत्युक्त्वा परितर्ज्य निह्नवपर मञ्जीरझङ्कारिणै
पादाघातभरैस्तया पुनरशाकस्य प्रिय प्रापित ॥ ७३ ॥

मध्या प्रगल्भा या द्वेधा नायकप्रणयादसौ
ऊनातिरेका ज्येष्ठा या सा कनिष्ठा भवेत्परा ॥ ७४ ॥

दाक्षिण्याद्धवा स्नेहाद्रागवानपि नायक ।
यथैव चेष्टते सा स्याज्ज्येष्ठा तदितरापि च ॥ ७५ ॥

अथ ज्येष्ठा कनिष्ठा च—

नीलेन्दीवरशङ्कया नयनयास्ते पट्पदानां गण
पातु वाञ्छति तन्निमीलय च दृशौ तिष्ठावृणोमि भ्रुवम्।
सन्ध्याकारि तथापरा सुयुवतीमुद्भिन्नरोमाङ्कुरा-
मन्त प्रेमरसाकुल स च युवाचुम्बच्चिरायादरात् ॥ ७६ ॥

अथ स्वीया—

यावज्जीव च सपत्तौ विपत्तौ या न मुञ्चति।
सा स्वीया प्रेम तस्यां नु स्यात्कस्यापि विवेकिन ॥ ७७ ॥

एता पङ्कजलोचना स्मररसक्रीडाविनोदाकुला-
श्चञ्चत्कङ्कणकिङ्किणीरणरणन्मञ्जीरकोलाहला।
सभ्रूभङ्गविलासहास्यसुभगा सद्भूषणैर्भूषिता
रेमे साहिभकन्दर स रसिकालकारचूडामणि ॥ ७८ ॥

इति सकलकलापारीणरसिकसाम्राज्यधुरीणश्री-
भद्रदरसाहिश्रृङ्गारदर्पणो प्रथम उल्लास ॥

## द्वितीय उल्लासः

अथ परकीया—

परकीया द्विधा ज्ञेया कन्योढा च तदङ्गने ।
श्रवणाद्दर्शनाच्चे तु भवतः स्मरपीडिते ॥ १ ॥

प्रेम्णा सान्द्रतरैर्मुहुर्मुकुलितैः किञ्चित्समाकुञ्चितैः
र्लज्जामन्थरितैर्विपर्यदितैर्धैर्यैश्च लीलाचलैः ।
काचित्काइसितवल्लभस्य वदनं सोत्कण्ठमुद्वीक्षते
सव्यस्तत्परित विलोक्य सकलं समावयाञ्जलिं ॥ २ ॥

काचित्स्ववल्लभवचो निशमय्य दूरा-
ल्लोलेक्षणा सरलितैर्नयनैर्ददर्श ।
इत्यं यथा श्रवणलोचनकर्णपूर-
स्थानान्तरं किमपि नाप मिदाप्रवृत्तिम् ॥ ३ ॥

काचिन्निजेष्टदयित दयिता निशम्य
दृष्ट्या निपीय रतिमाप निमीलिताक्षी ।
मूर्च्छा गतेव किल कामुकमुक्तमुक्ता
कान्तेव साथ ददृशे किल सौविदल्लैः ॥ ४ ॥

य श्रमोऽपि कृशतां च संज्वरं
जागरं च कुरुते विचिन्ततास् ।
वल्लभ किमुत दुर्लभ मन-
स्तं कुतोऽशुभकर दिदृक्षसे ॥ ५ ॥

अथ परवधूः सुभगस्य त्रिधा दर्शनमनुभवति—

स्याद्दर्शनं त्रिधा साक्षाच्चित्रे स्वप्नेऽथ . . . ।
. . . . . . . . . . . . . . . . ॥ ६ ॥

अथ साक्षाद्दर्शनम्—

तरयोल्लास . दक्षसंगतजलाः सद्यो व्रजन्त्यङ्गना
. . . . . . . . . . . . . . . . . . . . . ।

कोऽप्यन्यः सुभगः स एव सुभगो यद्गोत्रजे वेपथुः
स्वेदो जृम्भणसाध्वसानि भजतेऽस्यां परां मद्वपुः ॥ ७ ॥

अथ चित्रे—

चित्रार्पितोऽपि दयितः सखि चित्रमत्र
रोमाञ्चमुद्गमयति स्फुरवेपथुं च ।
लज्जां विभिद्य वशयत्ययमद्य रूप-
लावण्यसुन्दरतनुः प्रसभं मनो मे ॥ ८ ॥

अथ स्वप्ने—

कान्ते तल्पमुपागते प्रियतमा संवेशलब्धेऽथ त-
त्पाणिस्पर्शनजातरोमविकृतिः किञ्चित्सरोपावदत् ।
मा मां संस्पृश नाथ शून्यमिति सा किञ्चिज्जपन्ती यय-
स्या श्रुत्वेति शुशोच कः स सुभगः स्वप्नेऽपि यं नाथति ॥ ९ ॥

प्रदेशे—

सौधं सुन्दरि चन्द्रधामधवलं दीप्तप्रदीपोज्ज्वलं
गेयं कोकिलकाकलीसुमधुरं स्फारीभवन्मन्मथम् ।
अयमिन्दुसुधामधूकमधुरः सीधुः स्फुरन् निष्फलो
यदायाति गृहे न तेऽद्य सुभगः सौभाग्यशोभाचयः ॥ १० ॥

काले—

धुन्वन्सरोरुहवनानि मरुत्प्रयाति
चन्द्रोदयेन कुमुदानि निकस्वराणि ।
तल्पं प्रकल्पितमिदं कुसुमप्रवेकै-
स्तचं विनाखिलमिदं न मनो धिनोति ॥ ११ ॥

भङ्ग्या—

अलमलं तव यौवनमद्भिमि
सखि दृशोः कुचयोरपि विभ्रमैः ।
स सुभगो यदि नैव निरीक्ष्यते
न रहसि प्रसभं परिरभ्यते ॥ १२ ॥

अथान्यदीयकन्यास्वरूपम्—

कन्या रन्तु न च द्रष्टुं वक्तुं शक्नोति वल्लभम् ।
सलपन्तं च पश्यन्तं रहसि त्रपया स्फुटम् ॥ १३ ॥

आहूता समुपैति नापि दयितेनोक्ता न च व्याहर-
त्येषा वक्तुमपीहते न शयने शेते पुनः समुखम् ।
दीर्घं पश्यति नैव मीलितुमसावीप्सत्यमङ्गत्रपा-
वेशाद्धर्तरि नैव कातरमिदं धत्ते स्म बालायशा ॥ १४ ॥

नायिकाहृदयज्ञा या सखी जल्पति नायकम् ।
तरलाक्षीं नायकः किं वा स्नेहाभिव्यक्तिहेतवे ॥ १५ ॥

अतित्रपामुद्रितनेत्रकुड्मला
मुहुर्मुहुः कम्पदकिताङ्गयष्टिका ।
कुमुद्वतीयोचमयथाचन्द्र ते
कामी करस्पर्शमतीव काङ्क्षति ॥ १६ ॥

यच्चन्द्रातपचन्द्रचन्दनमृणालादीनि शीतानि मे
कामं सज्वरयन्ति घर्मसलिलक्लिन्नं वपुर्जायते ।
यत्सम्मोहयतीव पङ्कजवनमोवृभूतग दानिव-
स्तन्मन्दाक्षविजृम्भितं सुतनु त आ गीहि सर्वं ध्रुवम् ॥ १७ ॥

अथ मुग्धाचेष्टितानि—

सा वल्लभमपश्यन्तं प्रकृताक्षी विलोकते ।
आलिमालिङ्गति स्वैरं दूरादुद्वीक्षतेऽथ सम् ॥ १८ ॥

सख्या सलपति प्रायो हासं कुर्यादकारणम् ।
सुन्दराङ्गमथ व्याजादाविष्कुर्यात्सविभ्रमम् ॥ १९ ॥

मुहुर्मुहुः स्फति सख्यादिगुम्फिता किङ्किणीध्वजः ।
अङ्गभङ्गादिकां चेष्टां मञ्जुलां दर्शयत्यसौ ॥ २० ॥

प्रियतमेऽभिमुखं समुपागते
वनितया स्थितमेव समौनया ।

हर्षोत्कर्षवशान्निमीलितदृशा स्रस्यद्रणन्मेखला-
संवृत्याकुलहस्तया स्मरभरक्लिन्नस्मरावासया ।
चित्रं कल्पितगात्रयापि विजने तन्व्या चटूक्तीर्वद-
न्त्यास्तां रन्तुमपीक्षितुं प्रियतमः संभावितो दुर्घटः ॥ २९ ॥

दुःखितापि स्वयं कन्या न मुग्धत्वात्प्रियं वदेत् ।
तत्सखी तदवस्थां तु यथास्वं समुदीरयेत् ॥ ३० ॥

दम्भाद्दलानि किल मुर्मुरतां भजन्ते
श्वासैरयाश्रुमिषदीर्यत एव तापः ।
तस्या वियोगवशतः प्रिय कार्श्यमेवं
यन्नाङ्गुलीयमपि कङ्कणतां प्रयाति ॥ ३१ ॥

अथ पणाङ्गना—

स्वकीयानन्यशरणा वित्तशायी पणाङ्गना ।
प्रेमोद्रेकः परस्याः स्या[illegible]मा कामिनां प्रिया ॥ ३२ ॥

वेश्या सामान्यवनिता कृत्रिमस्नेहपण्डिता ।
तस्या गुणिनि न प्रीतिर्न चाप्रीतिश्च निर्गुणे ॥ ३३ ॥

केवलं धनलुब्धास्ता हृदि प्रेमविवर्जिताः ।
शृङ्गाराभासरूपः स्यात्तत्संभोगस्तु कामिनाम् ॥ ३४ ॥

यो वेषभृद्गूढकामः सुखलब्धधनो जडः ।
क्लीबस्तु पुंस्त्वमन्यो योऽभिमानी पितुर्धनात् ॥ ३५ ॥

इत्यादिपुरुषान् गत्वा सर्वमाकृष्य तद्धनम् ।
निर्धनांस्तान् विमुञ्चन्ति तास्ततो वर्जयेद्बुधः ॥ ३६ ॥

तासां प्रगल्भसुरतप्रौढानां तु मनोहरम् ।
तिरस्कृतपरस्त्रीकं मैथुनं स्यात्प्रियं नृणाम् ॥ ३७ ॥

गाढाश्लेषविमर्दितस्तनयुगं स्वेदार्द्रगण्डस्थलं
आस्यद्भ्रूयुगलं नखाङ्कमथितैर्धार्तविचित्रं पुनः ।
सन्दष्टप्रविसारसीत्कृतिरवं वेल्लत्कराम्भोरुहं
पण्यस्त्रीसुरतं रतेरिव गृहं कामी लभेत क्वचित् ॥ ३८

नान्याङ्गनासु सुरतं किल निर्विशङ्कं
कर्तुं क्षमः कुलवधूषु घवोऽप्यसूयाम्।
पण्याङ्गनासु लभते द्वयमेव तस्मात्
सर्वस्वमेव तदिमाः कमनस्य कामम् ॥ ३६ ॥

अयुक्त्या सेविता घ्नन्ति युक्त्या संमदयन्ति ताः।
निसर्गेणैव दुर्ज्ञेया वेश्यास्तेन विषोपमाः ॥ ४० ॥

अथैता अष्टौ नायिकाः—

आद्यौ स्वाधीनपतिकाथोत्का वासकसज्जिका।
अभिसन्धिता विप्रलब्धा खण्डिताप्यभिसारिका ॥ ४१ ॥

प्रोषितप्रेयसी चेति नायिकाः प्राङ्निरूपिताः।
ता एवेह भवन्त्यष्टौ स्वावस्थाभेदतो यथा ॥ ४२ ॥

अथ स्वाधीनपतिका—

पार्श्वं नोज्झति यस्यास्तु रतिप्रेमवशः पतिः।
नानाविलाससंसक्ता स्वाधीनपतिकोदिता ॥ ४३ ॥

तत्कण्ठे कुसुमस्रजं कलयति प्रागवृत्तपीनस्तन-
द्वन्द्वे पत्रलतां तनोति तिलकं भालेऽथ विन्यस्यति।
गण्डौ कुण्डलमण्डितौ जनयति प्रेमोदितैस्तद्वपुः-
स्पर्शं वापि दृधद्वियोगविधुरः प्रेयान् प्रियां नोज्झति ॥ ४४ ॥

अथोत्का—

सोत्का भवति यस्यास्तु सङ्केतं नागतः प्रियः।
तस्य चानागमे हेतुं चिन्ताव्याकुलिता स्मरेत् ॥ ४५ ॥

नागाग्मे दयितः कयापि परया रुद्धोऽथ सख्यायया
श्यामकः किमु कारणेन महता भाव्य तदत्र क्षणे।
विन्यस्यास्य सरोरुहं करतले दीर्घं रुदित्वा तथा
निश्वस्यापि चिरं ततः क्षितितले क्षिपाश्च पुष्पस्रजः ॥ ४६ ॥

अथ वासकसज्जा—

ज्ञेया वासकसज्जा सा सज्जितात्मा रताश्रया।
वल्लभागममालोच्य द्वारालोकनतत्परा ॥ ४७ ॥

सालंकारमुदीक्ष्य दर्पणतले स्वाङ्गं प्रदीपोज्ज्वलं
रम्यं तद्गृहमद्य पद्मनयनान्तः संमदं बिभ्रती।
आयाते दयिते भविष्यति रतं सोत्कण्ठमेवं चिरा-
देवेन्दीवरमालिकां किल पुरो द्वाःस्थाक्षिपत्तत्पथि ॥ ४८ ॥

अथाभिसन्धिता—

पदलग्नोऽपि यः कोपात्पतिः पूर्वं निराकृतः।
तं विना दुःखिता साभिसन्धिता कथिता बुधैः ॥ ४९ ॥

कोपात्कोपनया मया चरणयोर्लग्नः पतिर्धिक्कृतो
यन्नाभाष्य सखीवचोऽपि विहितं सर्वं ममस्तत्फलम्।
यच्छीतान्यपि चन्द्रचन्दनबिसाम्भोजादिवस्तूनि मे
चण्डांशूल्मुकसंनिभानि च वपुः सन्तापयन्ति ध्रुवम् ॥ ५० ॥

अथ विप्रलब्धा—

दूतीं संप्रेष्य सङ्केते गत्वा स्वयमनागते।
प्रिये च तं विना दुःस्था विप्रलब्धाभिधीयते ॥ ५१ ॥

सङ्केताश्रयमेव भर्तृगदितं संप्रेष्य दूतीं स्वयं
स्थित्वा तत्र च तं विना चिरमसौ धन्याभिलाषा ततः।
किं तु स्वागमसूचनाय नयनैर्बाष्पद्रवत्कज्जलै-
र्धैर्येभित्तिमिषाद्विलेप सुचिरं मन्दं वदत्यङ्गये ॥ ५२ ॥

अथ खण्डिता—

दयितो नागतो यस्याः कुतोऽपि रतिमन्दिरे।
तदनागमनेनैव संतप्ता खण्डिता मता ॥ ५३ ॥

दीर्घं निश्वसितं तथैव रुदितं सोत्कण्ठमुद्घोषितं
यातं मन्दगतेन साश्रमसकृच्चक्षुर्दरिद्राद्दिशम्।

सख्या संवपिन प्रिये रतिगृहे नागच्छति व्याकुल-
प्रेयस्या तदनुष्ठितं किमपि यद्वक्तु न कोऽपि क्षम ॥ ५४ ॥

अथाभिसारिका—

निस्त्रपा स्यान्मदेनैव मदनेनाप्रिया प्रिया।
अभियाति प्रियप्रान्तं सङ्केत साभिसारिका ॥ ५५ ॥

द्रष्टुं वल्लभमीक्षणैर्न तडितस्त्रस्तं न चाम्भोधर
ध्वानोऽप्याकलित न श्रुत तदुदित वाक्य विमृश्यानया।
नासारप्रभया स्मृता विधुरता तत्सङ्गमाकाङ्क्षया
सङ्केतं दयितस्य केवलमसौ चक्रेऽभिसारोद्यमा ॥ ५६ ॥

अथ प्रोषितपतिका—

यस्या कृत्यावधि भर्ता विदेश कारणाद्गत ।
तदनागमसतप्ता प्रोषितप्रेयसीति सा ॥ ५७ ॥

काचित्पाण्डुरगण्डमण्डलतुलत्कैशावलीसंयमं
कृत्वाथ श्लथकङ्कणच्युतिभयादुद्यम्य हस्तौ निजौ।
स्फारद्वारकपाटलम्बिततनुर्दत्तेक्षणा तत्पथि
प्राय प्रेमभरालसा सुकृतिना सद्य समाश्लिष्यते ॥ ५८ ॥

चिन्ताश्रुपातमरसञ्ज्वरखेददीर्घ-
निश्वाससम्युदितयत्र्नसंप्रयोगै ।
पयोरकथा गतधवा किल विप्रलब्धा
सा खण्डितापि विबुधै सदृशीत्यमेव ॥ ५९ ॥

स्वाधीनभर्तृका हृष्टा नानालंकृतिमण्डना।
एवं वासकसज्जा स्यात्पर सागन्तुकप्रिया ॥ ६० ॥

त्रिधाभिसारिका स्वीया परकीया पणाङ्गना।
स्वाधीनपतिकाद्यास्तु यथोक्ता प्राक् तथा मता ॥ ६१ ॥

स्वीया सलज्जा समया प्रच्छन्नापि प्रियं व्रजेत्।
परकीया तु व्रजेद प्रच्छन्ना शङ्किता हृदि ॥ ६२ ॥

निःशङ्किता मदोद्रेका प्रसृताक्षी सखीयुता ।
वेश्या तथैकधावस्थाभेदादेताः स्युरष्टधा ॥ ६३ ॥

पुनः सर्वास्त्रिधा ताः स्युरुत्तमा मध्यमाधमाः ।
शतत्रयी चतुरशीत्यग्रा भवति तन्मितिः ॥ ६४ ॥

अथोत्तमा—

प्रसीदत्यनुनीता या यथादोषं प्रकुप्यति ।
सानुरागा भृशं पत्यौ गुणहार्या मतोत्तमा ॥ ६५ ॥

क्रुद्धा किं मयि सुभ्रु कोऽन्यमनुजे क्रोधः प्रिय प्रायशः
कोऽस्यन्यस्त्वमसीति मा वद शुभे दासोऽस्मदीयः कथम् ।
इत्युपायं पदानतः प्रियतमो भूमेरुदस्यानया
सानन्दश्लथदश्रुसार्द्रकुचयोर्मध्ये धृतः कान्तया ॥ ६६ ॥

अथ मध्यमा—

स्वल्पापराधे या क्रोधं धत्ते शीघ्रं च मुञ्चति ।
कुर्वत्यल्पकारणाद्रागं याति सा मध्यमा स्मृता ॥ ६७ ॥

कोपावेशवशस्फुरत्तरलसद्बिम्बोष्ठपार्श्वोल्लसद्-
गण्डाभोगपरिस्खलच्छ्रमजलव्याजृम्भमाणच्छविः ।
सभ्रूभङ्गमपि त्वयापि सुभगे पादानतेऽनुग्रहं
चक्रे नूपुरमिश्रतत्कणवचसा मन्दं पृथक्कुर्वती ॥ ६८ ॥

अथाधमा—

प्रकुप्यति विना मन्तुं तुष्यत्यनुनयं विना ।
निर्हेतुकप्रवृत्तिर्या चलचित्ताधमा मता ॥ ६९ ॥

यस्मिन्नुज्ज्वलगण्डमण्डलमिदं पूर्णेन्दुबिम्बं हस-
त्युच्चैर्मन्मथभूपतेरपि धनुर्भ्रूविभ्रमो भङ्गुरः ।
हारः स्वेदजबिन्दुविद्रुमरुचिर्मन्दीभवत्स्वङ्गना-
स्यान्तो मानिनि कोऽभिमान इह ते पादप्रसक्ते मयि ॥ ७० ॥

ज्ञातिकालवयोऽवस्थाभावमन्मथनायकैः ।
भवेयुर्बहुधाप्यन्या नोदिता गुरुताभयात् ॥ ७१ ॥

कम्परोमोद्गमस्तम्भाः स्वेदाश्रुजडिमभ्रमाः ।
सपर्याः सम्भोगशृङ्गारे कविभिर्नायिकाश्रिताः ॥ ७२ ॥

धर्मार्थकामनिपुणोद्विजराजमित्र-
संबन्धितीव्रकुलजा ललना न सेव्याः ।
व्यङ्गास्तपोव्रतधराश्च विभिन्नसंख्या
हीनाङ्गयाश्च चपला महतामगम्याः ॥ ७३ ॥

स्वीयाभिर्वरवर्णिनीभिरनिशं संभोगसौख्यं सदा
कुर्वाणो नवनर्मभावकलनविधौ चातुर्यचर्याचणः ।
यस्तत्याज पराङ्गनानिधुवनं त्वप्रीतिकीर्तिप्रियः
सोऽयं नन्दतु नीतिमानकबरः शृङ्गारशृङ्गारदः ॥ ७४ ॥

इति सकलकलापारीणरसिकसाम्राज्यधुरीण-
श्रीअकबरसाहिशृङ्गारदर्पणे द्वितीय उल्लासः ।

## तृतीय उल्लासः

अथ विप्रलम्भशृङ्गारः—

विप्रलम्भस्तु शृङ्गारश्चतुर्धा वर्ण्यते बुधैः ।
पूर्वानुरागो मानात्मा प्रवासः करुणाह्वयः ॥ १ ॥

तत्राद्यः—

यः पूर्वदर्शनोद्भूतो दम्पत्योः सानुरागयोः ।
पूर्वानुरागो विज्ञेयः स चाप्यसौ भवेद्यथा ॥ २ ॥

अलं रम्भापत्रव्यजनपवनैश्चन्दनचयै-
रलं फुल्लाम्भोजप्रसवशयनीयैर्मम सखि ।
अलं चन्द्रज्योत्स्नाबिसकिसलयैर्दाहनिपुणैः
परं कन्दर्पाग्निं सुभगपरिरम्भः शमयति ॥ ३ ॥

पूर्णेन्दोरिव मण्डलाद्विरचितं यद्वा सुधास्यन्दितैः
स्त्यानीभूतममन्दसुन्दररसल्लावण्यपुञ्जीकृतम् ।
लीलासद्म रतेरिव स्मरशराभ्यासैकभूमिः कदा
द्रक्ष्यामि प्रणयप्रसादसुभगं कान्तामुखाम्भोरुहम् ॥ ४ ॥

चन्द्रचन्दनकर्पूरबिसपङ्केरुहादयः ।
स्मरज्वरं न दम्पत्योः शमयन्ति निषेविताः ॥ ५ ॥

मिथो दर्शनसंलापप्रेमान्दोलितचित्तयोः ।
भवेत्तयो रसप्राप्तौ दशावस्थापरः स्मरः ॥ ६ ॥

तास्त्विमाः—

तत्राभिलाषश्चिन्ता च स्मृतिस्तद्गुणकीर्तनम् ।
स्यादुद्वेगः प्रलापश्चोन्मादो व्याधिस्तथाष्टमः ॥ ७ ॥
जडत्वं मरणं चेति कामावस्था दश स्मृताः ।
दम्पत्योः संगमाभावे जायन्ते विषमा इमाः ॥ ८ ॥

अथाभिलाषः—

तत्संगमकृते यादृ संकल्पाकुलचेतसा ।
व्यवसायो य एव स्यादभिलाषः स संस्मृतः ॥ ६ ॥

लोलाक्षी चलमानसा कुत इयं भूयो गृहान्तर्विश-
त्यायातीह बहिः सहालिभिरहो संभाषते सस्मिता ।
धत्ते विभ्रममन्थरां गतिमथालोक्य प्रियस्याननं
तन्मन्ये विषमायुधस्य विशिखैर्लक्ष्यीकृता खद्यते ॥ १० ॥

अथ चिन्ता—

केनोपायेन लभ्यः स्याद्दयितोऽथ परः कथम् ।
तत्प्राप्तयेऽथ किं कार्यमिति चिन्ता निगद्यते ॥ ११ ॥

प्रेयान् दूरगतः सखी न निपुणा भृत्ये रहस्यं कुत-
श्चो वाच्यं न पुनः स्मरज्वरभरोऽमन्येऽस्ति वैद्यः पटुः ।
रागोऽस्मिन्मम चित्तयेति सुदृशा दृष्टे प्रिये सत्सखीं
यन्नत्वा चलनाकृतिर्न विहिता न प्रस्थितं न स्थितम् ॥ १२ ॥

अथ स्मृतिः—

औदास्यं परकृत्येषु यस्मिन्नेकाग्रता प्रिये ।
मनोरथैश्च निश्वासैश्चेष्टा तत्स्मरणं भवेत् ॥ १३ ॥

उज्जृम्भाधुरहम्यवालयवने नैवा विधत्ते रतिं
चन्द्रं निन्दति विन्दतीव दहनं कर्पूरवर्षं पुनः ।
दीर्घश्वासमरुद्भिरेव कृशतां याता वियोगच्चनु-
स्तन्मन्ये स विमुग्धया परिचितः कश्चिद्विदग्धो युवा ॥ १४ ॥

अथ गुणकीर्तनम्—

तद्रूपस्मितचातुर्यसंलापैः सदृशः परः ।
युवा न दृश्यते कोऽपि स्यादेतद्गुणकीर्तनम् ॥ १५ ॥

तद्रूपं स्मरविभ्रमस्मयहरं तन्मञ्जुलालोकनं
वाचस्ताः स्मरकेलिमङ्गलसुभगा निस्तन्द्रचन्द्रोपमम् ।

तस्यास्यं दयितेक्षतां न परतां विभ्रच्चदित्थं मतो
मन्ये भक्षितकालकूटमिव मे यस्मान्मुहुर्मूर्च्छति ॥ १६ ॥

अथोद्वेगः—

यत्र वस्तुनि रम्येऽपि द्वेषः प्रीतिर्न च क्वचित् ।
जीवितव्येऽप्यनाश्वासः स चोद्वेगो मतो यथा ॥ १७ ॥

संतापं तनुते शशी सुतनु ते प्रत्यङ्गमङ्गारव-
क्षेपश्चन्दनजो धिनोति न मनः शीतानिलोऽन्यादृशः ।
विश्वासोऽपि न जीवितस्थितिविधावुद्भ्रान्तचेता यत-
स्तत्किं सुन्दरि पञ्चबाणविशिखास्त्वय्यास्पदं चक्रिरे ॥ १८ ॥

अथ प्रलापः—

प्रियस्य संगमाभावान्मनो न लभते धृतिम् ।
वक्ति प्रियाश्रितालापं प्रलापो यत्र स स्मृतः ॥ १९ ॥

किञ्चित्कुञ्चितलोचनेन सुभगेनालोकिताहं मया-
पीतयं चारु निरीक्षितः स च किमप्यूचे वचः सस्मितम् ।
नो शक्ता प्रतिवक्तुमाशु सखि किं यातो विधाय क्रुधं
नायास्यति चेत्यनूद्य नयने विस्फारिते सत्पथि ॥ २० ॥

अथोन्मादः—

कम्परोदननिश्वासक्षितिलेखभ्रमादिभिः ।
चेष्टा संजायते यत्र स चोन्मादः स्मृतो यथा ॥ २१ ॥

दीर्घं निश्वसिति क्षितिं विलिखति श्वस्यत्कुरङ्गीदृशा
सोत्कम्पा पुलकाङ्किता किमपि च ध्यानाधिरूढा प्रिये ।
धृत्वाङ्के किल वल्लकीं च सुदती तस्थौ रुदत्येव सा
मन्ये केवलमेव मन्मथगुरोरादत्त दीक्षाक्रमम् ॥ २२ ॥

अथ व्याधिः—

दीर्घश्वासाकुलत्वं च यत्र संतापवेदने ।
शरीरकृशता प्रायो व्याधिः स्यादष्टमो यथा ॥ २३ ॥

श्वासैः शोषितपुष्पहारनिचयैरापाण्डुगण्डस्थलैः
संतापैः किल मुर्मुरीकृतसितश्रीखण्डलेपद्रवैः ।
गात्रं बालमृणालकोमलमिदं तन्वाङ्गि यत्तानवं
प्राप्तत्तन्मदनज्वरप्रकटितैर्दोषैरभिज्ञायते ॥ २४ ॥

अथ जडत्वम्—
श्वासाधिक्यं स्मृतिभ्रंशो हुंकारः समयं विना ।
स्तब्धत्वं च दृशः कार्श्यं जडतेत्युदिता यथा ॥ २५ ॥

यद्वक्त्रं घनसारसन्निभमिदं श्वासैः कदुष्णैः कृतो
बिम्बोष्ठस्तव धूसरोऽथ नयने निःस्पन्दतारे यतः ।
याता नाशमपि स्मृतिः परमसौ हुंकार एव स्थित-
स्तच्छङ्के सनिवेश एव मदनः प्रत्यङ्गमङ्गस्पृतः ॥ २६ ॥

अथ मरणम्—
यदा पृथग्विधोपायैर्नार्या न प्रियसंगमः ।
ततः स्मरेषुविद्धाया मरणस्य दशा भवेत् ॥ २७ ॥

एता एव दशावस्था पुंसोऽपि स्युर्मनोभुवः ।
वैधर्म्यान्मरणं प्राय कविभिर्नावर्ण्यते ॥ २८ ॥

वर्णयन्ति पुनः केचिन्मुहूर्त्तोज्जीवनकाङ्क्षया ।
सत्यवृत्तानुवादे तदुत्पाद्यं क्वचिदेव न ॥ २९ ॥

एकस्य मरणेनान्यो म्रियते चेत्कथञ्चन ।
प्रेमातिरेकता न स्यान्मृतस्येतरेण संगमः ॥ ३० ॥

प्राङ्नारी सानुरागा स्यान्नरः पश्चात्तदिङ्गितैः ।
ततः संभोगश्रृङ्गारो निसर्गसुभगो भवेत् ॥ ३१ ॥

अथ श्रृङ्गाराभासता—
ततोऽन्यथापि नो दोषः स्नेहसाम्यं यदि द्वयोः ।
एकापरक्तवृत्तौ तु श्रृङ्गाराभासता मता ॥ ३२ ॥

श्रृङ्गाराभासता प्रायो बुधैर्हास्येषु वर्ण्यते ।
दुर्योधन मया वेद्यं साद्यर्यं सफलीकुरु ॥ ३३ ॥

अथ परस्त्रीसंगमोपायः—

यस्यां च सानुरागः स्यान्नायकस्तत्सखीगणम् ।
आवर्जयति साम्नापि दानमानादिभिर्गुणैः ॥ ३४ ॥

तत्सखीनां पुरस्तस्याः स्तुतिं कुर्वन्निवेदयेत् ।
स्वाभिप्रायं विनाप्येता नियुञ्ज्यादिङ्गितं प्रति ॥ ३५ ॥

प्रकाश्य दूतीद्वारेण सम्बन्धमनोरथम् ।
सप्राभृतैः पुनर्लेखं प्रेषयेत्तामतन्द्रितः ॥ ३६ ॥

रहस्ये तां समालोक्य वचनैर्मृदुचाटुभिः ।
सविस्मयकलायोगैर्विस्मापयति नायकः ॥ ३७ ॥

व्याधिव्याजमुदीर्य शून्यसदने धात्रीसखीसद्मनि
स्याद्रात्रिभ्रमणे महोत्सवविधौ घोरे भयस्थानके ।
अन्यस्यापि निमन्त्रणेऽथ विपिने किञ्चिद्विविक्तस्थले
प्रायो नूतनसंगमः किल भवेत्सपदा वियुक्तस्तयोः ॥ ३८ ॥

गरीयान्यदि रागः स्यात्प्रार्थिता सा न लभ्यते ।
अन्योपायस्तदा कार्यो निस्तन्द्रः साधयेत्परः ॥ ३९ ॥

परस्त्रीसंगमोपायो न बुधैरुपदिश्यते ।
परं काव्याङ्गमेतत्तु रुचिरं तन्निगद्यते ॥ ४० ॥

प्रतिषेधभयः स्त्रीणां दुर्लभत्वं च वामता ।
तत्सर्वं कामबाणानां निशितीकरणं परम् ॥ ४१ ॥

कान्तानामभिमानाद्वा भयाद्वा परयोषिति ।
महतामपि रम्यं स्यात्प्रच्छन्नसुरतं यथा ॥ ४२ ॥

निम्ने पर्णकुटीरके विरचिते गत्वेऽथ वल्मीककुटे-
ष्वान्ते गाढतरे तडिद्विलसितैर्भीमे घने गर्जति ।
शङ्काव्याकुलितापि वामनयना यामीति जल्पन्त्यपि
प्रापस्तत्र रिरंसति प्रियहते संहृतयासौ मनः ॥ ४३ ॥

अथ मानः—

प्रियं प्रतीर्ष्यया यत्र विकारं कुरुतेऽबला ।
स मानस्तु परस्त्रीणां सङ्गदोषाद्भवेद्यथा ॥ ४४ ॥

किञ्चित्कुञ्चितमेव लोचनयुगं बाष्पाम्बुभिर्गद्गदं
गण्डौ पाण्डिममण्डितावपि परां धत्तः श्रियं पाटलाम् ।
बिम्बोष्ठस्फुरणं तवाद्य दयिते वाक्संयमश्चाधुना
नो विद्मः किमनुग्रहोऽस्ति यदितः स्वान्तेऽथवा विग्रहः ॥ ४५ ॥

स च त्रिधा भवेत्प्रायो नारीणां कामिनं प्रति ।
यथादोषमवेक्ष्य, स्यादुत्तमो मध्यमो लघु ॥ ४६ ॥

तत्र गुरुः—

भुक्त्वा सपत्नीमायाते पत्यौ दृष्टे नखाङ्किते ।
स्वयं तत्सदयोर्गोत्रस्खलिते स गुरुर्भवेत् ॥ ४७ ॥

तिर्यग्वक्रितमेव नेत्रयुगलं भ्रूविभ्रमो भङ्गुर-
श्वासः प्रस्फुरिताधरोऽरुणिमतां धत्ते कपोलद्वयम् ।
कोपावेशवशादियं तव दशा मय्यानते पादयो-
र्यावत्कः कृतयास्तदा भुजलतापाशेन बध्नातु माम् ॥ ४८ ॥

मध्यमः—

प्रिये दृष्टेऽन्यया सार्धमनुरागेण जल्पति ।
यद्वा सख्योदिते दोषे मानः स्यान्मध्यमो यथा ॥ ४९ ॥

कस्मात्तामरसश्रियं सुनयने धत्तस्तरां लोचने
धात्री किं कलकण्ठि निष्ठुरतरा सुभ्रु भ्रुवौ भङ्गुरे ।
मन्तुर्नास्ति मयीति तेन गदिते क्रोधं वृथा मा कृथा
मानिन्याः स्रवदश्रुनेत्रयुगलं चक्रेऽथ तूष्णींस्थितम् ॥ ५० ॥

लघु—

सानुरागदृशा नाथे परां पश्यति कामिनीम् ।
तस्मिन्नन्यमनस्केऽपि स लघीयान्मतो यथा ॥ ५१ ॥

चेज्जानासि कृतापराधमपि मां तत्पाणिना संस्पृशा-
मीति त्वत्कुचकुम्भमेव तदपि त्वं मन्यसे विप्रियम् ।
लीलातामरसेन तर्जय परं स्वीयं मुखं साधुभि-
र्नेत्रैः कज्जलमेचकैः किमु विधौ बिम्बाकृति नीयते ॥ ५२ ॥

यः कामिनां तु दुःसाध्यो देशकालबलादिभिः ।
कोपः स्त्रीणां भवेत्प्रायः सुखसाध्यो निगद्यते ॥ ५३ ॥

सौधं सुधांशुधवलं रमणीयचित्रं
किञ्चित्कणत्कनकराजिविराजमानम् ।
दीप्तप्रदीपमथ कल्पिततल्परम्यं
क्रीडावनं च कलितं पिककाकलीभिः ॥ ५४ ॥

इत्यादयः प्रदेशास्तु मानिनीनां मनोहराः ।
गरीयसोऽभिमानस्योल्लासनाय भवन्त्यमी ॥ ५५ ॥

दिक्कान्ताननदर्पणप्रतिनिधिं संवीक्ष्य राकानिशा-
कान्तं सौधशिरःसुधाधवलितं तल्पं दुकूलावृतम् ।
आघ्राय स्फुटगन्धबन्धुरतरान् सन्मालतीगुच्छकान्
तत्यात्र द्रुतमेव चाटुचतुरे कान्ते स्मयं मानिनी ॥ ५६ ॥

अभ्युद्गते शशधरे मधुमासि रम्ये
जम्भारिमन्मथमहोदयवासरेषु ।
वापीतडागजलकेलिषु मद्यपाने
मानः स्खलत्वमुपयाति मनस्विनीनाम् ॥ ५७ ॥

मुग्धे मन्मथधर्मवारणमिदं पूर्णेन्दुबिम्बं लस-
त्पुष्पैः पश्य रसालमञ्जरिमिमां कामेषुमन्वेषय ।
प्रीतौ कः प्रतिबन्धकस्तवेति निगदन् पादानतस्त्वं करे
बिभ्रत्याः सुतनोस्तनुः पुलकिता सिञ्चेव हार्दामृतैः ॥ ५८ ॥

प्रत्यप्रदोषसमये वनिताजनस्य
दूतीजनस्य पुरतो लघुरेव कोपः ।
प्रायो गुरुत्वमुपयाति स एव कानि-
पयेषु किं नु विषमा विषमेषु रीतिः ॥ ५९ ॥

किमपि चरणगतात्प्राणनाथादपेते
निबिडतरभिमाने किञ्चिदुत्कम्पशून्ये ।
स्तनयुगलविभागे प्रीतयाप्यायताक्ष्या
मुहुरनुसृतदूती वीक्ष्य कोपो व्यधायि ॥ ६० ॥

चाटूक्तैरपि पादपङ्कजपरीरम्भैर्मुहुश्चुम्बनैः
सान्द्रैः प्रेमवचोभिरम्बुजदृशः स्थिरमन्दिमाने गमः ।
अन्यस्त्रीपरिरम्भजातमुरसि स्पष्टाङ्गरागं समा-
लोक्य द्रागयितस्य नूतनतरस्तस्याः [redacted] रोषोऽभवत् ॥ ६१ ॥

अथ षडुपायाः—

सामदाने तथा भेद उपेक्षा प्रणतिस्ततः ।
षष्ठः प्रसङ्गविध्वंसो न दयतः शुचिहानिकृत् ॥ ६२ ॥

प्रसादने तु मानिन्या उपायाः षडिमे मताः ।
पुरतस्ते निदर्श्यन्ते शुभोदाहृतिसंयुताः ॥ ६३ ॥

अथ साम—

पालनीयस्त्वया कान्ते सापराधोऽपि मादृशः ।
एवं सान्त्ववचो यत्र तत्साम गदितं बुधैः ॥ [redacted] ॥

मादृक्षः खलु दुर्विनीत इति ते संरक्षणीयो यदा
क्रोधः कोऽपि च कोपने लघुतरः क्षन्तव्य एवाधुना ।
एवं सान्त्वनसूचकानि गदतः पत्युर्वचांस्येतया
नेत्राम्भः प्रशमय्य सस्मितमथो वक्तुं क्षमोऽनुग्रहः ॥ ६५ ॥

अथ दानम्—

यत्र तत्तुष्टये दद्याद्दयितो भूषणादिकम् ।
किञ्चित्कारणमुद्दिश्य तद्दानमुदितं यथा ॥ ६६ ॥

अयं मुक्ताहारः कुचकनककुम्भे तव शुभे
घटेतेत्युक्त्वा सोऽक्षिपदथ गले पङ्कजदृशः ।
तदा रोमोद्गमाङ्कुरितवपुरेषा क्रुधमलं
जहौ प्रेयानस्या द्रुतमथ चुचुम्बाधरतलम् ॥ ६७ ॥

अथ भेदः—

यत्र प्रसादितं तस्याः समावर्ज्य सखीजनम् ।
कान्तः प्राप्नोति तद्द्वारा कान्तां भेदः स चोच्यते ॥ ६८ ॥

अद्यो(?)द्दितिमानमाशु दधती हस्तद्वयं धुन्वती
मात्रागाः कितवेति कर्कशगिरा संतर्जयन्ती मुहुः ।
आगत्यापि वल्लभे प्रियतमा कोपभ्रमद्भ्रूलता
सख्यावर्जितयैव कोमलगिरा स्वैरं समाश्वासिता ॥ ६९ ॥

अथोपेक्षा—

परार्थपिशुनैर्वाक्यैरव्यक्तत्वानुग्रहसंविधाम् ।
यत्रानुगृह्यते योषिदुपेक्षा सा स्मृता यथा ॥ ७० ॥

हारस्तारतरः स्फुरत्तरमिदं ग्रैवेयकं सुभ्रु ते
रम्यस्ते तिलकः सुकाञ्चनमयी काञ्ची भृशं राजते ।
प्रत्यङ्गं स्पृशता प्रियेण विलसद्रोमोद्गमा तत्क्षणा-
दित्थं मानमुपेक्ष्यैव शनकैः संत्याजिता मानिनी ॥ ७१ ॥

अथ प्रणतिः—

दैन्यमेकं समाश्रित्य पादयोः पातनात्मता ।
प्रणतिर्वल्लभा सा स्याद्योषितो ललिता यथा ॥ ७२ ॥

काचित्कुङ्कुमपङ्कसंकरलसद्वृत्तोरुपीनस्तन-
द्वन्द्वाक्रान्तिपरिक्षिणप्रणयपारस्त्रीसंश्रये वीक्ष्य तत् ।
भर्तुः पादयुगानतस्य किमपि न्यूनं च शंसद्रसं
कामं संभ्रमदाप तीव्रविरहाल्लोलेक्षणाश्रु क्षणात् ॥ ७३ ॥

अथ प्रसङ्गविभ्रंशः—

यत्राकस्माद्प्रजायन्ते भयहर्षादिभावनाः ।
स स्यात्प्रसङ्गविभ्रंशः कोपभ्रंशाद्यथोच्यते ॥ ७४ ॥

वल्लभे गदति मे रागो हृदि
स्थिरपपात कृतघातनिःस्वनः ।

किं विभिरयुदितयत्युपाययो
कोपसंभ्रममपाकुरुतापला ॥ ७५ ॥

प्रसादने फलिताः स्युरित्युपाया यथोत्तरम् ।
प्रायस्तु भूरिशः कार्यास्त्वप्रधानास्त्वाः क्वचिद्बुधैः ॥ ७६ ॥

न चोपेक्षयितव्योऽपि कान्तया मानवः प्रियः ।
मानोऽपि जातु चिरतार्थः प्रणामोऽपसिद्धये ॥ ७७ ॥

प्रयुञ्जीतेत्युपायांश्च दयितापि प्रति प्रियम् ।
नोपेक्षेण पुनः क्रुद्धः स्यादिच्छित्वारथं परम् ॥ ७८ ॥

न स्यात्प्रेम विना मानिनीनाम्यनुनयां विना स्मरः ।
द्वयोरपि ततो मानभेदः स्यात्प्रीतिवर्धनः ॥ ७९ ॥

सानुरागा परोपाय भर्तः सुभग वल्लभ ।
दयितेव प्रिय स्वामिन्नाथ चन्द्रास्य जीवित ॥ ८० ॥

अधीशा मन्मथेत्याद्य शठ धृष्ट गतत्रप ।
भो दुःशील दुराचार दुर्भगाहिम निष्ठुर ॥ ८१ ॥

मानावस्थोरवचनाद्यपलोऽभिनाथ
नश्चिन्निपदस्य कस्तु दनिमोसमक्ष ।
प्रायः प्रयासयत्नरसदुर्पयन्ता च
द्रष्टव्यो मदेशिप्रयतमः विश्व कामिनीनाम् । ८२ ॥

रम्यस्ताण्डवडम्बरोऽपि शिखिनां केकाश्रुतां वह्निहसात्
पर्जन्या अपि गर्जितध्वनिभृतस्ते वज्रमादेव मे।
इद्धिन्नोऽपि कदम्बकोरकचय. सोऽङ्कारसन्दोहसात्
प्राणेशाविरहार्दितस्य सकलं दैवादसह्यं कृतम् ॥ ८५ ॥

चिन्तादौर्बल्यमालिन्यप्रागर्याव्यथतादयः।
स्त्रीणां स्युर्बहुधापापि स्यात्स्मृतिश्चावधे. परम् ॥ ८६ ॥

शशिकलेव तनुस्तनुतां गता
धरतनोज्वलितेऽद्य धवे भृशम्।
अहह काम परेऽहरि सायकान्
निगद कुत्र विमोक्ष्यसि निर्दय ॥ ८७ ॥

रूक्षा सेऽलकवल्लरी सुमलिना वेणी किमेषेक्षणे
नेत्रे सुभ्रु निरञ्जने धवलतां धत्तेऽथ बिम्बाधरः।
पाण्डुच्छायमिदं वपु'स सुभगो दूरे वियोगक्रम-
व्यापत्तापदशा सखीव सुतनोराश्लिष्य या तस्थुषी ॥ ८८ ॥

शङ्के न तत्र रजनी यदि वा न चन्द्रो
नो कौमुदी धवलयत्यथ विश्वविश्वम्।
किं वा न कोकमिथुनानि विदेशवर्ती -
मां प्रेयसीमपि न संस्मरतीह येन ॥ ८९ ॥

शशधर कुरु ज्योत्स्नामच्छां त्रिकालय पैरथ
विधुनु पवन स्मेराम्भोजावलीं प्रसर स्मर।
शिथिलय कथां तस्याप्यद्यावधि परिपूरिनः
किमपि च परं चेतः कर्तुं ममालि समीहते ॥ ९० ॥

स्युरतो नायकस्यापि दशा विरहसंभवाः।
कामबाणप्रहाराणा मा भूवंस्ता रिपोरपि ॥ ९१ ॥

यः प्रेमप्रथिमानमाकलयितु स्विद्विप्रयोगद्रव
जिज्ञासुः प्रयायौ निजप्रणयिनीं मेजे नियुज्य स्फुटम्।

शृङ्गारैकरसामृतस्तिमितधीरुद्दामधामाद्भुतः
श्रीसाहिर्जयतादसावकबरो भूपालचूडामणिः ॥ १२ ॥

इति सकलकलापारीणरसिकसाम्राज्यधुरीण-
श्रीअकबरसाहिशृङ्गारदर्पणे तृतीय उल्लासः ॥

---

रम्यस्ताण्डवडम्बरोऽपि शिखिनां केकाभृतां वह्निसात्
पर्जन्या अपि गर्जितध्वनिभृतस्ते वज्रमादेव मे ।
वह्निश्चोऽपि कदम्बकोरकचयः सोऽङ्गारसन्दोहमात्
प्रायो राविरहार्दितस्य सकलं देवादृशं कृतम् ॥ ८५ ॥

चिन्तादौर्बल्यमालिन्यजागर्याव्यग्रतादयः ।
स्त्रीणां स्युर्बहुधाथापि स्यान्मृतिश्चावधेः परम् ॥ ८६ ॥

शशिकलेव तनुस्तनुतां गता
परतनोश्चलितेऽद्य धवे भृशम् ।
अहह काम परेऽहनि सायकान्
निगद कुत्र विमोक्ष्यसि निर्दय ॥ ८७ ॥

कृष्णा तेऽलकवल्लरी सुमलिना वेणी किमेणेक्षणे
नेत्रे सुभ्रु निरञ्जने धवलतां धत्तेऽथ बिम्बाधरः ।
पाण्डुच्छायमिदं वपुः स सुभगो दूरे वियोगक्रम-
व्यापत्तापदशा सखीव तुतनोराश्लिष्य या तस्थुषी ॥ ८८ ॥

याहे न तत्र रजनी यदि वा न चन्द्रो
नो कौमुदी धवलयत्यथ विश्वविश्वम् ।
किं वा न कोकमिथुनानि निदेशवर्ती-
मां प्रेयसीमपि न संस्मरतीह येन ॥ ८९ ॥

यदपर पुर ज्योत्स्नामच्छां विकासय कैरवं
विधुनु पवन स्मेराम्भोजावलीं प्रसर स्मर ।
शिथिलय कथा तस्याप्यद्यावधि परिपूरितः
किमपि च परं चेतः कर्तुं ममालि समीहते ॥ ९० ॥

स्फुरतो मायकस्यापि दशा विरहसंभवाः ।
कामबाणप्रहाराणां मा भूवंस्ता रिपोरपि ॥ ९१ ॥

यः प्रेमप्रथिमानमाकलयितुं स्विद्विप्रयोगद्रुम
जिज्ञासुः प्रणयी निजप्रणयिनीं भेजे वियुज्य स्फुटम् ।

शृङ्गारैकरसामृतस्तिमितधीरुद्दामधामाद्भुतः
श्रीसाहिर्जयतादसावकबरो भूपालचूडामणिः ॥ ६२ ॥

इति सकलकलाधारीणरसिकसाम्राज्यधुरीण-
श्रीमकबरसाहिशृङ्गारदर्पणे तृतीय उल्लासः ॥

---

## चतुर्थ उल्लासः

अथ करुणात्मक —

यत्रैकस्यात्यये मग्नो मृतप्रायो भवेत्पर ।
तत्प्रेम प्रलपेत्कान्ता स ज्ञेय करुणात्मक ॥ १ ॥

कान्तानां स्मरकेलिचम्पकलता च्छिन्ना प्रसन्नाम्बकी-
प्रकाश्या कवलीकृत पिककलस्य नोऽद्यकेशीरत ।
चन्द्रस्यापि च चन्द्रिका विदलिता नैका रसाली रति
निस्सारीकृतमेव विश्वमिद काम हता शंभुना ॥ २ ॥

तन्व्यङ्गया मधुरस्वर पिककुले कैशय मयूरव्रजे
वक्त्रेणाम्बुजमुग्धसिग्धी च हरिणे पीनस्तनौ धारये ।
बोलाम्ब नवपल्लव सुरभिणा मन्दानिलमौलयै-
रेतैर्मे दयिता विभज्य च हृता धाता न किञ्चिन्मम ॥ ३ ॥

प्रायेण मन्मथदहनामियतीमवस्था
यातोऽसि न मन्मथो खलु म दनाग्न ।
यस्या कृते स्वपनगामि तवैव मूर्च्छा
सा मामतः नयनलिङ्गितव रिपूर ॥ ४ ॥

न मे तापव्यापप्रशमननिधौ चन्द्रशकले
न वा चन्द्रज्योत्स्ना हृदयमुपगूढ न तद्वचम् ।
परागी मद्दिवात्यधमपि च मूर्च्छापरवशा-
धुना जामयता मयि सुतनु सचेहि सुहृदम् ॥ ५ ॥

इतिमात्रोद्भवामस्यावस्था विस्मृत्य च द्वयो ।
कारुण्याज्जायते केषाश्चिदेष करुणाभ्रम ॥ ६ ॥

दम्पत्योरपि भावेऽस्ते सङ्गमे च भवेदयम् ।
भूप शृङ्गारवचनं सता च करुणो मत ॥ ७ ॥

ततः शृङ्गार एवायं काव्यत्वेनानुभावितः ।
कविभिर्गुम्फितो बाढं सुन्दरत्वं प्रकाशते ॥ ८ ॥

अथ सख्यः—

प्रतिवेश्मा नटी चेटी कारुर्धात्री च शिल्पिनी ।
बाला तपस्विनीत्याद्याः स्त्रीणां सख्यः स्मृता बुधैः ॥ ९ ॥

वाग्मित्वं स्मृतिरुत्साहो भक्तिश्चित्तज्ञता वचः ।
मधुरं नर्मनैपुण्यं कलाभ्यासश्च तद्गुणाः ॥ १० ॥

कौतुकं मण्डनं रत्नोपालम्भोऽथ प्रसादनम् ।
सङ्गश्च विरहाश्वासः सखीकर्मेति संस्मृतम् ॥ ११ ॥

कस्यालेख्यमिदं स्थलेखि फलके तन्वङ्गि सर्वं यद्
श्यामस्येति मया तदालिवचनं श्रुत्वा ह्यवालोक्य च ।
सा वक्तुं न शशाक चारुनयना लज्जानताङ्गी परं
रोमाञ्चाञ्चितवर्ष्मणा निगदितं मद्वल्लभस्येति तत् ॥ १२ ॥

सध्रीची किमपि प्रसाधनविधिं कृत्वाखिलाङ्गेष्वपि
स्वप्रत्यं समवेक्ष्य मन्मथसमावेशाद्दते चातुरीम् ।
नेपथ्यकमण्डने कृतवती तस्याः पुनः पादयोः
कामिन्यास्तदिमे कुङ्कुमकलिते चक्षुर्निपातं व्यधात् ॥ १३ ॥

चाटूक्तिः प्रथितायते यदयिना गाढं समाश्लिष्यते
भूयश्चुम्बनचुञ्चुतिः क्रियत इत्यस्यैव सौख्यावहम् ।
मुग्धे त्वं प्रतिबोधितालि निपुणैर्भर्तुर्यथैवाधमे
निष्णाताखिलनर्मकर्मसु परं कामेन संशिक्षिता ॥ १४ ॥

उच्चण्डस्मरघस्मरानललसज्ज्वालावलीढे हृदि
प्रेयस्या विधृता त्वया निगदितः प्रेमातिरेकः स्वयम् ।
तच्चित्रं किञ्च शीतलेऽपि हृदि ते संतापयन्त्यै चिरं
विश्रम्यात्र वयस्यया मम पुनर्निस्नेहया न स्थितम् ॥ १५ ॥

सुभग कुरु मे वाक्यं मुञ्च क्रुधं निजवल्लभां
प्रणयकलहव्यग्रां कामं स्मरज्वरजर्जराम् ।
अनुनय न चेदेषाकिञ्चिन्यसौ हिमदीधिति-
प्रखरकिरणैर्यास्यत्युच्चैर्बलादपि पञ्चताम् ॥ १६ ॥

अमुकपुरुषमत्राहं दधे धृतलुब्धे
निभृतमिह युवाभ्यां स्थेयमानन्दयन्त्याम् ।
रहसि सुरतकेलिं कुर्वतोः कामिनोः सा-
गमःपरलतौघं चेत्युदित्या वयस्या ॥ १७ ॥

वामं पक्ष्म सुभ्रु लोचनमिदं भूयः स्फुरत्युच्चकै
रोमाञ्चश्रियमातनोति नितरां वक्षोजयुग्मं पुनः ।
उत्कम्पं भजते यदूरुयुगलं रम्भाप्रकाण्डोपमं
तन्मन्ये प्रियसंगमं निगदति प्रायोऽद्य सद्यस्तराम् ॥ १८ ॥

लभ्य इत्यादिकं कर्म कुर्वाणा योषितां सदा ।
संभवन्ति रहोमन्त्रविज्ञाननिपुणाः प्रियाः ॥ १९ ॥

शृङ्गार एष कविभिः किल नव्यकाव्य-
बन्धेषु सुन्दरतया ननु वर्णनीयः ।
एतेन हीनमपि किं च कवेः कवित्वं
नैरस्यमेव तृणपूरुषवद्भजेत ॥ २० ॥

वर्णयामः कथं चात्र भयप्रेमानुषङ्गताम् ।
भवत्या प्रापिता संस्थां कान्तेनापि शुभात्मना ॥ २१ ॥

अथ हासः—

वचोऽङ्गवेषवैकृत्याद्धासमूलात्प्रजायते ।
पात्रत्रयगतो ज्ञेयो रसोऽयं हास्यसंज्ञितः ॥ २२ ॥

स त्रिविध उत्तमो मध्यमोऽधमश्च । तत्र उत्तमः—

ईषद्विकस्वरैर्गण्डैरीषद्विकचलोचनैः ।
ईषद्भिन्नोष्ठदशनैस्त्रिधा स्यादुत्तमेषु सः ॥ २३ ॥

भाले लोचनमुज्ज्वलज्ज्वलनभृत्पाणौ ससरकङ्कणं
वक्ष चार्द्रगजाजिनं निगरणो हालाहलालंकृतिः।
शेष शेखर एव वेषरुचिर सम्मोहनार्हो वरः
सत्यं चण्डि तवेति शंभुरुदितः सोल्लासहासोऽवतात् ॥ २४ ॥

प्रायो विदीर्णवदनो मध्यमानां मनेद्यम्।
अधमानां पतद्बाष्पो दूराद्दुश्चध्वनिः स तु ॥ २५ ॥

अथ मध्यमः—
कान्तेऽद्यापि न वेत्सि मन्मथरसव्यापारमार्गं मनाक्
वक्त्रः पङ्कजलोचने त्वदधरो भृङ्गेण न प्रेयसा।
सख्येत्थं हसिते वधूः प्रमदत सोल्लासहासस्फुट-
द्वकोचम्मधुगन्धलुब्धमधुपैश्छायितं रा मति ॥ २६ ॥

अथाधमः—
गुञ्जाहारमपास्य मौक्तिकलता कण्ठे कृता किं तरां
त्यक्त्वा बर्हिणबर्हमम्बुजमहो कर्णावतंसीकृतम्।
इत्थं साहिशिरोमणे अकबर त्वद्वैरिनारीगणः
कान्तारे शबरैर्विलोक्य नितरां हासेनयुक्तो हस्यते ॥ २७ ॥

स्वामिन्नपायियातोऽत्र मुखरागोऽङ्गवर्तनम्।
माध्यगण्डकृतस्पन्दो नेत्रोल्लासः प्रजायते ॥ २८ ॥

अथ करुणः—
शोकात्मा करुणः प्रेष्ठमभृत्यस्तयाद्भवेत्।
निर्वेदवाप्पवैवर्ण्यप्रलापात्मात्र नायकः ॥ २९ ॥

प्रेयान्मे सह बान्धवैर्मृतिमगाद्युद्ध्वा रणप्राङ्गणे
वैधव्येन दुनोति मुग्धवनिताचेतांसि सैषा वधूः।
दुस्त्याज्योऽङ्कगतः शिशुः किमु कृतं दैव त्वया त्वद्द्विषः
कान्ता साहिशिरोमणे अकबरोदितेति मूर्च्छामगात् ॥ ३० ॥

वर्णनीयोऽत्र भूपातो दीनवाक्य च रोदनम्।
दैवनिन्दा प्रहारश्च देहस्येत्यादिको गुणः ॥ ३१ ॥

अथ रौद्रः—

प्रतिक्रोधात्मको रौद्रो भवेच्छत्रुपराभवात् ।
नायकोऽत्र भवेदुग्रः सामर्षो भीष्मविग्रहः ॥ ३२ ॥

उद्युक्तैर्युधि बाहुजैर्जनयिता यैर्मेऽत्ययं प्रापितो
रामामप्यपहाय वीर्यकलिता रामाह्वयोऽहं द्विजः ।
तेषां उग्रालकरालकालपरशुस्त्यच्छिराणां द्विषां
सद्यः शोणितपूरितेऽद्य सवनं कर्तास्मि तीर्थे ध्रुवम् ॥ ३३ ॥

रौद्रानुभावः—

शस्त्रक्षेपास्यलौहित्यस्वेदकम्पाधरग्रहाः ।
भ्रूकुटिः पाणिघातोऽत्र जायते शौर्यशंसनम् ॥ ३४ ॥

अथ वीरः—

स्यादुत्साहमयो वीरो दयादानरणोद्भवः ।
नायकः सत्त्वसंपन्नस्त्रिविधोऽत्र प्रजायते ॥ ३५ ॥

शौर्यौदार्यगभीरत्वधैर्यादिगुणसंयुतः ।
आवर्जितजनो नेता भवेत्प्रौढपराक्रमः ॥ ३६ ॥

अथोत्तमवीरः—

शेषः कूर्मयुतो बिभर्ति वसुधां विश्वंभरः केशवः
शंभुर्ब्रह्मसहाय एव विदितः सत्त्वे निबद्धस्थितिः ।
एकः शूरशिरोमणिर्निजभुजेनैकेन धत्ते भुवं
श्रीसाहिर्जयवादसाधकवरः खड्गोग्रधाराभृता ॥ ३७ ॥

अथ मध्यमः—

नूनं त्रिविक्रम जगत्त्रयमात्रलाभ-
संतोषितो नु मुदितोऽसि यतोऽधिकार्थम् ।
नाभ्यर्थितो बलिरहं भवतापि यद्वै-
रूपेण वाञ्छितमनोरथदानशौण्डः ॥ ३८ ॥

अधाधम —

यस्मिन्नधभ्रमुकातरन्तमुसला मूल स्पमुन्मूलिता
ज्वालाजालजटालमेव भिदुर विध्मातमालिन्य माम्।
हहो वृत्ररिपो तदेव भवन किं विस्मृत सयुग
चेदद्य पि चिकीर्षसि प्रतिभट सज्जोऽस्मि लङ्केश्वर ॥ ३९ ॥

तदनुभाव —

अभीक्षत्य धृतिर्मानरोमाञ्चस्मृतियुक्तय ।
भवन्ति वचनात्तेपामर्षवेगाश्च निश्चितम् ॥ ४० ॥

अथ भयानक —

शब्दादेर्विकृतादघोरवस्तुसदर्शनादपि ।
भयानको भवेन्नेता बाल स्त्री कातर पुन ॥ ४१ ॥

बालो गभीरमुरजध्वनिमालिलिङ्ग
मातुर्गल समुपकम्प्य विसारिबाहु ।
प्राशुक्करध्वतिकरग्लपिताङ्गरोम
शोभा ममार परमामपि भीतभीत ॥ ४२ ॥

मानिन्या रतरङ्गसगरविधौ पादानतोऽपि प्रिय
प्रेमप्रायवचासि ■ प्रणिगन्न् क्रोधा धया धिक्कृत ।
सोऽप्यम्भोधरगर्जितर्जितधिया शम्पानिपातोरकया
सश्लिष्ट स्वयमेव बाहुलतया हित्वाभिमान तया ॥ ४३ ॥

अथ नीचभयानक —

दम्भरात्यिनत्रेपथुविभ्रम-
भ्रमत्रलाकननूमिरुपद्रुते ।
पकचरेत्र नरेश नवारिभि
र्वेदनदत्तवरैर्वनितायितम् ॥ ४४ ॥

तदनुभाव —

करपादादिकम्पोऽत्र त्रासो वैवर्ण्यमथ च ।
भवन्ति स्वेदरूपदमुखशोषा ससम्भ्रमा ॥ ४५ ॥

अथ बीभत्सः—

जुगुप्सात्मा तु बीभत्सः स्याद्दृष्टस्य दर्शनात् ।
श्रवणात्कथनाद्वा पूतिगन्धादिवासितात् ॥ ४६ ॥

दुर्गन्धप्रचुरकलेवरं घसास्य
बीभत्सं कुणपसमूहभीषणं तत् ।
भ्राम्यद्भिः पतगगणैर्विरूपमुच्चै-
र्दुर्देवं पितृवनमाततान शोभाम् ॥ ४७ ॥

तदनुभाव —

घ्राणास्याच्छादनं देहसंधूतिर्मुखकूणनम् ।
निष्ठ्यूतिः स्याद्घृणा चात्र महोद्वेगान्महत्स्वपि ॥ ४८ ॥

अथाद्भुतः—

विस्मयात्मादद्भुतोऽपि स्याद्रसोऽसंभाव्यवस्तुनः ।
मायेन्द्रजालदिव्यस्त्रीविपिनादेश्च दर्शनात् ॥ ४९ ॥

खचर त्वया हृताहं माया निजविद्यया वितत्य मयि ।
भ्रमयसि मनसि विकृतिं कर्तुं तदलं मुधा क्लेशैः ॥ ५० ॥

तदनुभावः—

अत्र नेत्रविकासः स्यात्प्रहर्षः साधुवादता ।
स्वेदरोमाञ्चकम्पाश्च हर्षा निश्चलतारता ॥ ५१ ॥

अथ शान्त —

सम्यग्ज्ञानसमुद्भूतः शान्तः सर्वत्र तुल्यदृक् ।
निस्पृहोऽत्र भवेद्धेता रागद्वेषपरित्यागवर्या ॥ ५२ ॥

सान्द्रप्रेमरसार्द्रयौवनगतिः स्वैरं हृता संभ्रमाद्
दत्तं भूरि धनं यथारुचि तथा पात्राय वित्तार्थिने ।
विस्फूर्जत्करवालकालनिहतो दुर्वैरिवीरव्रजः
श्रेयः नः किमतः परं किल परब्रह्मैकतानात्मनाम् ॥ ५३ ॥

तदनुभावः—

निर्विकल्पं मनो गाढं यत्रात्मन्यधितिष्ठति।
सुखे न हर्षो नामर्षो दुःखे शान्तरसः स तु ॥ ५४ ॥

अथ विरोधिरससमावेशः—

पूर्वमुक्ता रसा येऽष्टौ मिथस्तेषु विरोधिनौ।
द्वौ द्वौ रसौ तयोः प्राज्ञः संसर्गं वर्जयेदिह ॥ ५५ ॥

मिथः शृङ्गारबीभत्सौ रसौ वीरभयानकौ।
रौद्राद्भुतौ तथा हास्यकरुणौ च विरोधिनौ ॥ ५६ ॥

शृङ्गाराच्च भवेद्धासो वीराद्भुतसंभवः।
भयानकस्तु बीभत्साद्रौद्राच्च करुणो रसः ॥ ५७ ॥

बुधैर्यौ जन्यजनकौ रसौ निगदितौ मिथः।
तयोर्युक्त्यापि संभेदः कृतः प्रायो न दुष्यति ॥ ५८ ॥

अथ भावाः—

पूर्वं रसेषु ये भावाः संक्षिप्योक्ता विभागशः।
स्वतन्त्रतोऽपि ते चात्र पर्यन्ते संमताः सताम् ॥ ५९ ॥

एते रत्यादयो भावा रसाभिप्रायसूचकाः।
स्थायिसात्त्विकसंचारिभेदैः पञ्चाशदेव ते ॥ ६० ॥

चित्ते न संस्थिते भावाः संकीर्णाः संभवन्त्यपि।
प्रायो रत्यादयो यद्वत्तथाप्येते निरूपिताः ॥ ६१ ॥

स्मृतिर्धृतिर्भयं चिन्तासूयाशङ्कास्रजाश्रुतः।
ग्लानिश्च विस्मयौत्सुक्ये लज्जोन्मादौ रतिस्तथा ॥ ६२ ॥

जाड्यं विषादश्चापल्यमवहित्था मतिस्तथा।
निद्रेति भावाः शृङ्गारे बोद्धव्या व्यभिचारिणः ॥ ६३ ॥

चापल्यं च श्रमो निद्रा ग्लानिः स्वप्नोऽप्यसूयया।
युक्ता शङ्कावहित्थेति भावा हास्ये मतास्त्वमी ॥ ६४ ॥

निर्वेदो जडता चिन्ता ग्लानिर्दैन्यं रुजा धृतिः ।
एते भावाः प्रयोक्तव्याः करुणे भावकोविदैः ॥ ६५ ॥

प्रमोदो गर्व उत्साहोऽसूया चापल्यमुग्रता ।
मदो वेग इमे भावा रौद्रे ज्ञेया विचक्षणैः ॥ ६६ ॥

प्रतिबोधस्तथामर्षोऽसूया क्रोधो धृतिर्मतिः ।
वितर्कश्चाश्रुसंमोहो हर्षशोकौ मदस्मयौ ॥ ६७ ॥

आवेगश्च तथोग्रत्वं वीरे भावा इमे स्मृताः ।
वचनीयं च संत्रासो मरणं स्युर्भयानके ॥ ६८ ॥

भयं विषादोऽपस्मारो रोगोन्मादौ मतिर्मदः ।
बीभत्ससंभवा विज्ञैर्भावास्त्वेते प्रकीर्तिताः ॥ ६९ ॥

जाड्यं मोहस्तथावेगो मतिर्हर्षश्च विस्मयः ।
इति भावा निगद्यन्ते रसे कविभिरद्भुते ॥ ७० ॥

संचारिण इमे ज्ञेया भावाः प्रतिरसं श्रिताः ।
सात्त्विका एत एवं स्युः सर्वेऽखिलरसाश्रयाः ॥ ७१ ॥

अथ रीतयः—

स्युः कौशिकी चारभटी सात्वती भारतीत्यपि ।
चतस्रो रीतयश्चैता रसावस्थितिसूचकाः ॥ ७२ ॥

यस्यां लास्यविलासभङ्गिरचनागीतस्तुतिः प्रस्तुता
स्त्रीणां विभ्रमहावभावकलितं सम्भोगशर्मादितम् ।
वेशाङ्गस्तुतिचारुबन्धमधुरा स्तोकैः समासैरियं
विद्वद्भिर्गदिता सुगुम्फरुचिरा रीतिर्ध्रुवं कौशिकी ॥ ७३ ॥

एषा शृङ्गारकरुणाहास्यानां हृदये बुधैः ।
वृत्तिर्बलात्प्रयोक्तव्या संदर्भललिता यथा ॥ ७४ ॥

त्वद्दिग्व्याघ्रचपेटनं स्तनमिदं भर्ता बिभर्ति श्रियं
मुग्धे स्फाटय दाडिमीफलधिया दृष्टा कदाचिच्छुकः ।

यद्वा प्रेमसुधाम्बुधेरिव तरी पत्रेपुयायायया
किं वा ते खमयडन स्तनतटे तच्चाशुकनावृण ॥ ७५ ॥

अथारभटी—

यस्या शस्त्रविदारितप्रतिभटैः सकीर्यते सयुग
ग्रन्याद्य प्लुतलङ्घितादिकरण मायेन्द्रजालादिकम । ६
दुर्विज्ञेयपदार्थसार्थकलितायोजस्विरचणाद्भुता
वृत्तिः सारभटी बुधैर्निगदिता भूय समासाकुला ॥ ७६ ॥

इय तु विबुधै रौद्रे बीभत्सेऽथ भयानके ।
प्रायः शोभाकरी वृत्तिर्महाकाव्ये प्रयुज्यते । ७७ ॥

प्रासप्रोतचलद्द्विरीन्द्रसदयाप्रोद्दामदन्ताचाल
दुग्घरकुम्भतटाघ्रप्रकटितव्यासस्तमुक्तागणम् ।
सक्रोधप्रतियोधरोधनिपुणस्फूर्जत्कृपाणैर्भटै
शस्त्राशस्त्रि गदागदि प्रवहते भीम मिथ सयुगम् ॥ ७८ ॥

नाम्भोदस्तनित त्विद रथारवास्तूर्यं न विद्युल्लता
तस्यासिजलदा न मेचकरुचो गम्भीरघोषा गजा॰ ।
इत्थ साहिशिरोमणे अकबर त्वद्वैरिनारीगणो
ऽरण्ये ग्रस्यति नश्यतीति निगदन् धाराधरस्यागमे ॥ ७९ ॥

नास चिखादिषति शोणितपूरमुच्चै
स्तृष्यान् पिपासति पुरस्तदसौ विकर्षन् ।
भ्रश्यत्कबन्धकलिते समराङ्गणे द्राक्
फेरुः स्फेत्कृतिमुच्च किल घस्मरीति ॥ ८० ॥

अथ सात्वती—

हर्षोत्कर्षपरा महाद्भुतरसप्राया च सत्त्वाधिका
त्यागोद्रेकवती मनोहरतरोदारैश्च वाचा चयै ।
माधुर्यादिगुणैरुपेतवचना सद्धर्मशुद्धिं दध
त्येषा वृत्तिरुदाहृता कृतमुपै धन्या सता सात्वती ॥ ८१

एषा नात्यन्तगूढार्था शब्दसंदर्भबन्धुरा ।
वीरे रौद्रेऽद्भुते शान्ते प्रायो वृत्तिः प्रयुज्यते ॥ ८२ ॥

त्वं विष्णोः शयनाश्रयो जनयिता लक्ष्म्यास्तथैवाकरो
रत्नानां सिकताश्च शुक्तिजगणास्त्वय्येव गम्भीरिमा ।
मर्यादा च जगातिगा जलनिधे किं वर्णयामः परं
त्वत्तीरेऽपि तृषा न शाम्यति यतः पान्थस्य तद्गर्हितम् ॥ ८३ ॥

त्वत्कीर्तिर्जगन्ति पाण्डुरयति त्वत्कीर्तिरेषामला
मित्राणामरुणीकरोति वदनान्यथ पाण्डुगण्डान्यपि ।
इत्यत्यद्भुतमेव यत्कलयती श्यामानि तानि द्विषां
श्रीमत्साहिशिरोमणे अकबर त्वां वर्णयामः कथम् ॥ ८४ ॥

खड्गव्यग्रकरोग्रवीरनिवहैरुद्दारितारिव्रज-
शुण्डाकन्धरसिन्धुरस्रवदसृक्पूरैः प्रवाहायितम् ।
आसारायितमत्र बाणविसरैः शम्पायितं चासिभिः
प्रावृट्काल इवाधुनाकबर त्वत्संगराहवः ॥ ८५ ॥

यौवनं विगलितं मनोरमं
सार्धमेव विषयेच्छया गतम् ।
ब्रह्मरूपजलधौ मनोऽधुना
रन्तुमेव किल [illegible] समीहते ॥ ८६ ॥

अथ भारती—

मुख्यनायकमाश्रित्य या सद्वक्रोक्तिबन्धुरा ।
वीरहास्याद्भुतैराढ्या वृत्तिः सा भारती मता ॥ ८७ ॥

उत्पादव्ययविलासार्थघटनादुःखादिकं यत्परैः
स्यात्साधारणमेतदेव सकलं प्रायः सतामप्यहो ।
प्रोन्मत्तद्विपकर्णतालतरला शुभ्रातपत्रश्रियो
नूनं निष्प्रभतां भजन्त इह तद्धेतुः परं साहसम् ॥ ८८ ॥

सुरक्षितस्येति यशोदया हरे
अंगप्रपीरचयारचयचेतसः ।

वमौ प्रवालस्थितमौक्तिकप्रभं
शिशोः स्मितं किञ्चिदुदञ्चिताधरम् ॥ ८९ ॥

निर्भयोऽप्यकबरेश्वरो भयं
यद्ददौ समिति वैरिणां हठात् ।
तेष्वमन्दधवलं यशः स्वयं
चित्रमत्र समुपाददे तराम् ॥ ९० ॥

इत्थं महाकविविनिर्मितनव्यकाव्य-
ग्रन्थान् विलोक्य सदलंकरणैरुपेतान् ।
वृत्तीरिमाः समवगम्य रसप्रयुक्ताः
काव्यं महाकविरसौ विदधीत रम्यम् ॥ ९१ ॥

अथ काव्यदूषणानि—

प्रत्यनीकं च विरसं दुःसंधानरसं पुनः ।
नीरसं पात्रदुष्टं च काव्यं शिष्टैर्न शस्यते ॥ ९२ ॥

प्रत्यनीकरसमाह—

तस्याः स्मरामि वदनं हरिणेक्षणायाः
स्फूर्जत्प्रबलचलतजपूतिपरीतगण्डम् ।
रत्युत्सवस्य समये किल काव्यमेतत्
स्यात्प्रत्यनीकरसमाप्तबुधैर्निषिद्धम् ॥ ९३ ॥

मातृमृत्युदुःखं हित्वा मायामालम्ब्य यौवनम् ।
मुधा सुन्दरि मा रोदीरित्यादि विरसं भवेत् ॥ ९४ ॥

एक एव रसो यत्र ग्रन्थे गाढं निषेव्यते ।
नैरन्तर्येण तत्केचित्प्राहुर्विरससंज्ञितम् ॥ ९५ ॥

त्वं याहि तामनुचितां ज्वलिता या तव कृते कृतं मूढ ।
मयि चाटुकारवचनैस्तद्दुःसन्धानरसमाहुः ॥ ९६ ॥

विद्वेषी वल्लभो मानी ग्लानो मान्यो युवा कृशः ।
तस्या विरहतस्तस्याः काम्यमित्यादि नीरसम् ॥ ९७ ॥

रतिप्रगल्भा कन्येयं नित्यं कथा कुलाङ्गना ।
निर्व्याजं गणिका मूढा पात्रदुष्टं स्मृतं बुधैः ॥ ९८ ॥

एवमन्यरसेष्वेते दोषा वर्ज्या विचक्षणैः ।
संसर्गतो भवेद्येषां कवित्वमपि नीरसम् ॥ ९९ ॥

क्रमेण पद्मचातुरीनियतनायिकाभ्युदय-
स्फुरत्प्रवरसोल्लसल्ललितविभ्रमप्रबन्धेन तु ।
अनङ्गरससंगरप्रथितमान्यमुद्रावतीं
प्रसादयतु मानिनीमकबरेश्वरोऽहर्निशम् ॥ १०० ॥

यद्यस्ति काव्यरचनासु रुचिर्विदग्धा
नानारसेषु रसिकत्वकुतूहलं वः ।
तत्पद्मसुन्दरकविप्रथितं सुरम्यं
शृङ्गारदर्पणमुपाध्ययतुष्टचित्ताः ॥ १०१ ॥

इति सकलकलापारीणरसिकसाम्राज्यधुरीण-
श्रीअकबरसाहिश्रृङ्गारदर्पणे चतुर्थ उल्लासः ॥

